[श्रीः]

[वृत्तरत्नाकरः]

# प्रथमोऽध्यायः

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माऽच्युताऽर्चितम् । गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १.१ ॥

वेदार्थशैवशास्त्रज्ञः पव्येकोऽभूद्लोकशङ्करम् । तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ १.२ ॥

तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् । वृत्तरत्नाकरं नाम बालानां सुखसिद्ध्ये ॥ १.३ ॥

पिङ्गलादिभ्राचार्यैर्यदुक्तं लौकिकं द्विधा । मात्रावर्णविभेदेन च्छन्दस्तदिह कथ्यते ॥ १.४ ॥

षडध्यायनिबद्धस्य च्छन्दसोऽस्य परिस्फुटम् । प्रमाणमपि विज्ञेयं षड्त्रिंशदधिकं शतम् ॥ १.५ ॥

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः । समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ १.६ ॥

सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ । ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ १.७ ॥

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः । गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ १.८ ॥

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः । वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥ १.९ ॥

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः । पुरःस्थितेन तेन स्याल्लघुताऽपि क्वचिद्गुरोः ॥ १.१० ॥

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि । अल्पव्ययेन सुन्दरि (!) ग्राम्यजनो मिष्टमिश्नाति ॥ १.११ ॥

अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः । ज्ञेयः पादश्चतुर्थाशो यतिर्विच्छेदसंज्ञितः ॥ १.१२ ॥

युक्समं विषमं चालूक्स्थानं सद्भिर्निगद्यते । सममर्धसमं वृत्तं विषमं च तथापरम् ॥ १.१३ ॥

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः । तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १.१४ ॥

प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् । द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १.१५ ॥

यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् । तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १.१६ ॥

आरभ्यैकाक्षारात्पादादेकैकक्षरवद्धितैः । पृथक्छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम् ॥ १.१७ ॥

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः । शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १.१८ ॥

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका । गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ॥ १.१९ ॥

त्रिष्टुप्च जगती चैव तथाऽतिजगती मता । शक्वरी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ १.२० ॥

धृतिश्चाऽतिधृतिश्चैव कृतिः प्रकृतिराकृतिः । विकृतिः सङ्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ॥ १.२१ ॥

इत्युक्ताश्छन्दसां संज्ञाः क्रमतो वच्मि साम्प्रतम् । लक्षणं सर्ववृत्तानां मात्रावृत्ताऽनुपूर्वकम् ॥ १.२२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे संज्ञाभिधानो नाम प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः

[ आर्या-प्रकरणम् (१-७) ]

लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥ २.१ ॥

षष्थे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चके तस्मादिह भवति षष्ठो लः ॥ २.२ ॥

त्रिष्वङ्केषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन ॥ २.३ ॥

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । [सं(अनुनासिक)-लङ्घ्य]
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ २.४ ॥

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ तस्याः ।
चपलेति नाम तस्या प्रकीर्तितं नागराजेन ॥ २.५ ॥

आद्यं दलं समस्तं भजेय लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपलासोदिता मुनिना ॥ २.६ ॥

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयते सोक्ता विशुद्धधीभिर्जघनचपला ॥ २.७ ॥

[ गीति-प्रकरणम् (८-११) ]

आर्याओरथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः क्रटयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ २.८ ॥

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं ता मुनिर्ब्रूते ॥ २.९ ॥

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ २.१० ॥

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं भवति यदीयमर्द्धमुदितार्यागीतिः ॥ २.११ ॥

[ वैतालीय-प्रकरणम् (१२-२०) ]

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रला गुरुः ॥ २.१२ ॥

पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ॥ २.१३ ॥

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥ २.१४ ॥

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ २.१५ ॥

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ २.१६ ॥

पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ २.१७ ॥

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ २.१८ ॥

अस्य युग्मरचिताऽपरान्तिका ॥ २.१९ ॥

अयुग्भवा चारुहासिनी ॥ २.२० ॥

[ वक्त्र-प्रकरणम् (२१-३०) ]

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २.२१ ॥

युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २.२२ ॥

ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ २.२३ ॥

चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २.२४ ॥

यस्या लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २.२५ ॥

सौतवस्याऽखिलेष्वपि ॥ २.२६ ॥

भेनाऽब्धितो भाद्विपुला ॥ २.२७ ॥

इत्थमन्या रश्चतुर्थात् ॥ २.२८ ॥

नोऽम्बुधेश्चेन्नविपुला ॥ २.२९ ॥

तोऽब्धेस्तत्पूर्वान्या भवेत् ॥ २.३० ॥

[ मात्रासमक-प्रकरणम् (३१-३८) ]

द्विगुणितवसुलधुरचलधृतिरिति ॥ २.३१ ॥

मात्रासमकं नवमो ल्गान्तम् ॥ २.३२ ॥

जो न्लावथाम्बुधेर्विश्लोकः ॥ २.३३ ॥

तद्युगलाद्वानवासिका स्यात् ॥ २.३४ ॥

बाणाष्टनवसु यदि लश्चिता ॥ २.३५ ॥

उपचित्रा नवमे परयुक्ते ॥ २.३६ ॥

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ।

अनियतवृत्तपरिमाणयुक्तं प्रथितं जगत्सु पादाकुलकम् ॥ २.३७ ॥

वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरुवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ २.३८ ॥

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।
सगुरु शकलयुगलकमपि सुपरिघटितललितपदवितति भवति शिखा ॥ २.३९ ॥

विनिमयविनिहितशकलयुगलकलितपदविततिविरचितगुणनिचया ।
श्रुतिसुखकृदियमपि जगति त्रि जशिर उपगतवति सति भवति खजा ॥ २.४० ॥

अष्टावर्धे गा द्वयभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ।
दलमपरमपि वसुगुणितसलिलनिधिलघु कविरचितं पदवितति भवति ॥ २.४१ ॥

त्रिगुणनवलघुरंवसितिगुरुरितिदलयुगकृततनुरतिरुचिरा ॥ २.४२ ॥

# तृतीयोऽध्यायः

गुः श्त्रीः ॥ ३.१ ॥
गौ स्त्री ॥ ३.२ ॥
मो नारी ॥ ३.३ ॥
रो मृगी ॥ ३.४ ॥
म्गौ चेत्कन्या ॥ ३.५ ॥
म्गौ गिति पङ्क्तिः ॥ ३.६ ॥
त्यौ स्तस्तनुमध्या ॥ ३.७ ॥
शशिवदना न्यौ ॥ ३.८ ॥
विद्युल्लेखा मो मः ॥ ३.९ ॥
त्सा चेद्वसुमती ॥ ३.१० ॥
म्सौ गः स्यान्मदलेखाः ॥ ३.११ ॥
भौ गिति चित्रपदा गः ॥ ३.१२ ॥
मो मो गो गो विद्युन्माला ॥ ३.१३ ॥
माणवकं भात्तलगा ॥ ३.१४ ॥
म्नौ गौ हंसरुतमेतत् ॥ ३.१५ ॥
जौ समानिका गलौ च ॥ ३.१६ ॥
प्रमाणिका जरौ लगौ ॥ ३.१७ ॥
वितानमाभ्यां यदन्यत् ॥ ३.१८ ॥
राम्नसाविह हलमुखी ॥ ३.१९ ॥
भुजगशिशुभृतां नौ मः ॥ ३.२० ॥
म्सा ज्गौ शुद्धविराडिदं मतम् ॥ ३.२१ ॥
म्नौ ज्गौ चेति पणवनामकम् ॥ ३.२२ ॥
जौँ रगौ मयूरसारिणी स्यात् ॥ ३.२३ ॥
भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ ३.२४ ॥
मत्ता ज्ञेया मभसगयुक्ता ॥ ३.२५ ॥
नरजगौर्भवेन्मनोरमा ॥ ३.२६ ॥
त्जौ जो गुरुणेयमुपस्थिता ॥ ३.२७ ॥
स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ ३.२८ ॥
उपेन्द्रवज्रा जतजास्ततो गौ ॥ ३.२९ ॥
पादौ यदीयावुपजातयस्ताः ॥ ३.३० ॥
स्मरन्ति जातिष्विदमेव नाम मे ॥ ३.३१ ॥
नजजलगैर्गदिता सुमुखी ॥ ३.३२ ॥
दोधकवृत्तमिदं भभभाद्गौ ॥ ३.३३ ॥
शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ३.३४ ॥
वातोर्मीयं कथिता म्भौ तगौ गः ॥ ३.३५ ॥
वाणरसैः स्याद्भतनगगैः श्रीः ॥ ३.३६ ॥
म्भौ न्लौ गः स्याद्भ्रमरविलसितम् ॥ ३.३७ ॥
रान्नराविह रथोद्धता लगौ ॥ ३.३८ ॥
स्वागतेति रनभाद्गुरुयुग्मम् ॥ ३.३९ ॥
ननरलगुरुरचिता वृन्ता ॥ ३.४० ॥
ननरमगुरुभिश्च भद्रिका ॥ ३.४१ ॥
श्येनिका रजौ रलौ गुरुर्पदा ॥ ३.४२ ॥
मौक्तिकमाला यदि भतनाद्गौ ॥ ३.४३ ॥
उपस्थितमिदं ज्सौ ताद्गकारौ ॥ ३.४४ ॥
चन्द्रवर्त्म निगदन्ति रनभसैः ॥ ३.४५ ॥
जतौ तु वंशस्थमुदीरितं जरौ ॥ ३.४६ ॥

स्यादिन्द्रवंशा ततजै रसंयुतैः ॥ ३.४७ ॥
इह तोटकमम्बुधिसैः प्रथितम् ॥ ३.४८ ॥
द्रुतविलम्बितमाह नभौ भरौ ॥ ३.४९ ॥
मिनुशरविरतिर्नौ म्यौ पुटोऽयम् ॥ ३.५० ॥
प्रमुदितवदना भवेन्नौ च रौ ॥ ३.५१ ॥
नयसहितौ न्यौ कुसुमविचित्रा ॥ ३.५२ ॥
रसैर्जसजसा जलोद्धतगतिः ॥ ३.५३ ॥
चतुर्जगणं वद मौक्तिकदाम ॥ ३.५४ ॥
भुजङ्गप्रयातं भवेद्यैश्चतुभिः ॥ ३.५५ ॥
रैश्चतुर्भिर्युता स्रग्विणी सम्मता ॥ ३.५६ ॥
भुवि भवेन्नभजरैः प्रियंवदा ॥ ३.५७ ॥
त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ॥ ३.५८ ॥
धीरैरभाणि ललिता तभौजरौ ॥ ३.५९ ॥
प्रमिताक्षरा सजससैरुदिता ॥ ३.६० ॥
ननभरसहिता महितोज्ज्वला ॥ ३.६१ ॥
पञ्चाश्वैश्छिन्ना वैश्यदेवी ममौ यौ ॥ ३.६२ ॥
अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ३.६३ ॥
इह नवमालिका नजभयैः स्यात् ॥ ३.६४ ॥
स्वरशरविरतिर्ननौ रौ प्रभा ॥ ३.६५ ॥
भवति नजावथ मालती जरौ ॥ ३.६६ ॥
जभौ जरौ वदति पञ्चामरम् ॥ ३.६७ ॥
अभिनवतामरसं नजजाद्यः ॥ ३.६८ ॥
तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ३.६९ ॥
म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीअम् ॥ ३.७० ॥
चतुर्ग्रहैरतिरुचिरा जभस्जगाः ॥ ३.७१ ॥
वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ३.७२ ॥
( उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत्) ॥ ३.७३ ॥
सजसा जगौ भवति मञ्जुभाषिणी ॥ ३.७४ ॥
ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ३.७५ ॥
म्तौ न्सौ गावक्षग्रहविरतिसम्बाधा ॥ ३.७६ ॥
ननरसलघुगैः स्वरैरपराजिता ॥ ३.७७ ॥
ननभनलघुगैः प्रहरणकलिता ॥ ३.७८ ॥
उक्ता वसन्ततिलका तभजा जगौ गः ॥ ३.७९ ॥
सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ३.८० ॥
उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ३.८१ ॥
इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ३.८२ ॥
द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥ ३.८३ ॥
द्विहतहयलघुरथ गिति शशिकला ॥ ३.८४ ॥
स्रगिति भवति रसनवकयतिरियम् ॥ ३.८५ ॥
वसुहययतिरिह मणिगुणनिकरः ॥ ३.८६ ॥
ननमयययुतेयं मालिनी भोगिलोकैः ॥ ३.८७ ॥
भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ३.८८ ॥
सजना नयौ शरदशयतिरियमेला ॥ ३.८९ ॥
म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ३.९० ॥
भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ३.९१ ॥
नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ३.९२ ॥
रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ३.९३ ॥
जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ३.९४ ॥
दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ३.९५ ॥

रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा ॥ ३.९६ ॥
मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरु चेत् ॥ ३.९७ ॥
हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ॥ ३.९८ ॥
मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ३.९९ ॥
स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥ ३.१०० ॥
सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ ३.१०१ ॥
ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥ ३.१०२ ॥
त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥ ३.१०३ ॥
म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ ३.१०४ ॥
भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिति ॥ ३.१०५ ॥
यदिह नजौ भजौ भ्जभलगास्तदश्वललितं हरार्कयतिमम् ॥ ३.१०६ ॥
मताक्रीडा मौ त्नौ नौ नल्गिति भवति वसुशरदशयतियुता ॥ ३.१०७ ॥
भूतमुनिनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥ ३.१०८ ॥
क्रौञ्जपदा भमौ स्मौ ननना न्गाविषशरवसुमुनिविरतिरिह भवेत् ॥ ३.१०९ ॥
वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ ३.११० ॥
मो नाः षट्सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम् ॥ ३.१११ ॥
यदि ह नयुगलं ततः सप्तरेफा स्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥ ३.११२ ॥
प्रतिचरणविवृद्धरेफाः स्युर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥ ३.११३ ॥
प्रचितकसमभिधो धीरधीभिः स्मृतोदण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ ३.११४ ॥

# चतुर्थोऽध्यायः

विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ॥ ४.१ ॥
भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्ययुता द्रुतमध्या ॥ ४.२ ॥
सयुगात्सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गौ ॥ ४.३ ॥
ओजे तपरौ जरौ गुरुश्चेन्मसौ ज्गौग्भद्रविराड्भवेदनोजे ॥ ४.४ ॥
असमे सजो सगुरुयुक्तौ केतुमती समे भरनगाद्गः ॥ ४.५ ॥
आख्यानकीं तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् ॥ ४.६ ॥
जतौ जगौ गो विषमे समे चेत्तौ ज्गौ ग एषा विपरीतपूर्वा ॥ ४.७ ॥
सयुगात्सलघू विषमे गुरुर्युजि नभौ भरकौ हरिणप्लुता ॥ ४.८ ॥
अयुजि ननरला गुरुः समेन्जमपरवक्त्रमिदं ततो जरौ ॥ ४.९ ॥
अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ ४.१० ॥

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।
पुष्पताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ ४.११ ॥

स्याअयुग्मके रजौ रयौ समे चेज्जरौ जरौ गुरुर्यवात्परा मतीयम् ॥ ४.१२ ॥

# पञ्चमोऽध्यायः

[पदचतुरूर्ध्व-प्रकरणम् (१-५)]

मुखवादोऽष्टभिर्वर्णैः परे स्युर्मकरालयैः क्रमाद्वृद्धैः ॥
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं
तदुदितममलमतिभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ ५.१ ॥

प्रथममुदितवृत्ते विरचितविषमचरणभाजि ॥
गुरुकयुगलनिधन इह सहित आङा
लघुविरतपदविततियतिरिति भवति पीडः ॥ ५.२ ॥

प्रथममितरचरणसमुत्थं श्रयति स यदि लक्ष्म ।
इतरदितरगतितमपि यदि च तुर्यं
चरणयुगलकमिति कलिका सा ॥ ५.३ ॥

द्विगुरुयुतसमलचरणान्ता मुखचरणगतमनुभवति च तृतीयः ।
अपरमिह लक्ष्म प्रकृतमखिलमपि यदिदमनुभवति लवली सा ॥ ५.४ ॥

प्रथमधिवसति यदि तुर्यं, चरमचरणपदमवसितगुरुयुग्मम् ।
निखिलमपरमुपरिगतमिति ललितपदयुक्ता, तदिदममृतधारा ॥ ५.५ ॥

[उद्गता-प्रकरणम् (६-८)]

सजादिमे सलघुकौ च नसजगुरुकैरथोद्गता ।
त्र्यङ्घ्रिगतभनजला गयुताः सजसा अगौ चरणमेकतः पठेत् ॥ ५.६ ॥

चरणत्रयं व्रजति लक्ष्म यदि सकलमुद्गतागतम् ।
ना भगौ भवति सौरभकं चरणे यदीह भवतस्तृतीयके ॥ ५.७ ॥

नयुगं सकारयुगलं च भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ५.८ ॥

[उपस्थितप्रचुपित-प्रकरणम् (९-११)]

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्त्रितयं सनजरगास्ततो ननौ सः ।
त्रिनपरिकलितजयौ प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ५.९ ॥

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति प्रततमतिभिरिति गदितं लघु वृत्तम् ॥ ५.१० ॥

प्रथमे च विरतिरार्षभं ब्रुवन्ति ॥
तच्छुद्धविराट्पुरः स्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ५.११ ॥

विषमाक्षरपादं वा पादैरसमं दशध्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ ५.१२ ॥

# षष्ठोऽध्यायः

[प्रस्तारः]

प्रस्तारो नष्टमुद्दिष्टमेकद्वयादिलगक्रिया ।
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ ६.१ ॥

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ ६.२ ॥

ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ६.३ ॥

[नष्टम्]

नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः ॥
विषमे चैकमाधाय स्यादर्धेऽर्धे गुरुभवेत् ॥ ६.४ ॥

[उद्दिष्टम्]

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत् ।
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ६.५ ॥

[एकद्वयादिलगक्रिया]

वर्णान्वृत्तभवान्सैकानौत्तराधर्यतः स्थितान् ।
एकादिक्रमतश्चैतानुपर्युपरि निक्षिपेत् ॥ ६.६ ॥

उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ।
उपर्याद्याद्गुरोरेकमेकद्व्यादिलगक्रिया ॥ ६.७ ॥

[सङ्ख्यानम्]

लगक्रियाङ्कसन्दोहे भवेत्सङ्ख्या विमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैका वा जनयेदिमाम् ॥ ६.८ ॥

[अध्वयोगः]

सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ॥
वृत्तस्याङ्गुलिका व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥ ६.९ ॥

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तश्छन्दस्तेनाभिरामं
वृत्तरत्नाकराख्यम् ॥ ६.१० ॥